# घटकर्परकाव्यम्

अभिनवगुप्तकृतकुलकविवृत्या

तारानाथकृतटीकया च समेतम्

इत्यच्युते विशति वेश्म जगाद राधा
किं तत्त्वमत्र सखि मां वद संशयानाम् ।
राधे, न सङ्कुच, चल प्रविशाम तस्याः
सख्यास्तवात्र हरिणा कलयाम सङ्गम् ।। 136 ।।

आलीषु मन्दहसितामृतवर्षिणीषु
कृष्णोक्तिपाटवमथोदभिनत् तदुक्तम् ।
हृद्वप्रमन्वधिततर्कतरुस्ततोऽस्या
ऋद्धः [1] फलं बहुरसं निखिलावबोधम् ।। 137 ।।

अन्तर्दधे बहिरगादथवात्र देवी
तन्मार्गणाय तदितस्त्वरया प्रयामः ।
विद्यां त्वमेव सखि तामुपदिश्य कृष्णं
आनन्दयेति सहसा निरगुस्तदाल्यः [2] ।। 138 ।।

तत्प्रेम सम्पुटगतैर्नवकेलिरत्नै –
स्तौ मण्डितावजयतां रतिकान्तिकोटी : ।
सन्तो ऽपि यच्छ्रवणकीर्तनचिन्तनाद्यै –
स्तौ प्राप्तुमुन्नतमुदः सततं जयन्ति ।। 139 ।।

षट्शून्यऋत्त्ववनिभिर्गणिते तपस्ये
श्रीरूपवाङ्मधुरिमामृतपानपुष्टः ।
राधागिरीन्द्रधरयोः सरसोस्तटान्ते
तत्प्रेमसम्पुटमविन्दत कोऽपिकाव्यम् ।। 140 ।।

इति श्रीविश्वनाथचक्रवर्तिविरचितं प्रेमसम्पुटाख्यं काव्यं समाप्तम् ॥ [3]

---

1. 'राद्ध' इति ख – मातृकायाम् ।
2. 'तदान्याः' इति ख – मातृकायाम् ।
3. 'इति श्री प्रेमसम्पुटाख्यं काव्यं समाप्तम् ।
इदं प्रेम सम्पुटपुस्तकं श्रीकृष्णदासस्य ।।
इति ख – मातृकायाम् ।

अपूर्वः कोऽयं ते वरद शिरसः शेखरविधि
र्ननु ज्ञातं प्लुष्टं स्मरधनुरिदं मूर्धनि धृतम् ।
यदालोकाल्लोके विषमविशिखः स्फूर्जतितरा
मिति प्रोक्ते देव्या गलित नियमः शम्भुरवतात् ॥1॥

[वि०] इदं प्रोषितप्रमदया हेतुभूतया प्रोषितप्रमदामुद्दिश्य कथ्यते कुलकम्. तत्र किञ्चित् कविनिबद्धप्रमदावक्तृकम्, किञ्चत् कविनिबद्धतत्सखीभाषितम्, किञ्चित् कविनिबद्धदूतीभाषितम्, अन्यत् कविप्रकटितप्रतिदूतीवचनम्, इतरत् स्वतन्त्रकविकथितम्, इति बहुप्रकारं दर्शयिष्यामः; नतु सैव एका कथनकर्त्री. प्रोषितः प्रमदो वल्लभो हर्षश्च यस्याः; अथ च प्रोषितवल्लभेन वियुक्ता, प्रकृष्टेन यौवनेन शृङ्गारजनितेन मदेन च युक्ता. अन्यदेशतया वियुक्तत्वमेव प्रोषितत्वेन लक्ष्यते.

छादिते दिनकरस्य भावने
खाज्जले पतति शोकभावने ।
मन्मथे च हृदि हन्तुमुद्यते
प्रोषितप्रमदयेदमुद्यते ॥2॥

दिनं करोतीति दिनकरस्तस्य भावने रश्मिपुञ्जे छादिते तिरस्कृते सति तासां तमः प्रतिपक्षतया सुप्रसिद्धानामपि न न सति तन्मनाः स सूर्यो यत्र आच्छाद्यते तत्र कथं हर्षालोकोऽपि मानसेऽस्तु, अथच विरहिणीनां रजनिसमयजनितरणरणककलुषितहृदयानां कदाचित् दिनमपि विविधविनोदनालोकवितरणेन बन्धुतां यायात्. अद्य तु यत्प्रसादात् तादृशदिनं प्रजायते तस्य अपि कश्चिदात्मीयः सहजः स्वभावः, सोऽपि आच्छादित इति सातिशयं भाग्यहीनत्वं द्योतितम्. तथा जले च आकाशात् पतति. कीदृशि. शोकं भावयति. जलं हि निकटवर्तिना पार्थिवरजसा

पार्थिववरजन्तोरात्मानं भावयति एकतया योजयतीति श्रुतमिदम्, अद्य तु अपूर्वं वर्तते शोकेन विरहिणीर्भावयति शोकमय्य एव सम्पाद्यन्ते ताः. नहि तासां प्रावृट्समयमध्ये प्रियागमनशङ्कामात्रमपि अस्तीति तावत्काले नैराश्यमेव. खात् पततीत्यनेन अमुष्य दुष्प्रसहस्य अप्रतीकारतया सातिशयोऽनुतापः सूच्यते. तथा मन्मथो हृदयप्रहरणं प्रति ससंरम्भः. अथच बाह्यो यः कश्चित् हन्ता तस्मादुपायैः पलाय्यतेऽपि, अयं पुनर्हृदयावस्थित एव अन्तर्हननं प्रति ससंरम्भः. चशब्द एककालतासूचकः. यथा कश्चित् दुर्जनो निर्जने निरालोके दुर्दिन एव सशोके जनमत एव निरुध्यमानमेकाकिनं प्राप्यैव लब्धच्छिद्रः प्रहरति, तथैव अमुष्मिन् काल ईदृशमिव कामिनीजने मदनस्ताडयतीत्यर्थः.

(ता) प्रोषितप्रमदया विदेशगतभर्तृकया इदं प्रागुक्तं सर्वत्र उच्यते. दिनकरस्य रश्मिसमूहे छादिते पिहिते सति (न) केवलं भावने छादिते सति किन्तु खादाकाशाज्जले पतति किं विशिष्टे शोकभावने शोको विरहस्तं दुःखं भावयन्ति प्रतिपादयन्ति शोकभावनं तस्मिन् न केवले जले पतति मन्मथे च हृदि आधारे हन्तुं मारयितुं व्यवसिते सति.

(टि) तारानाथटीकायां षष्ठोऽयं श्लोकः.

**सर्वकालमितिवाह्य तोयदा**
**आगताः स्थ दयितो गतो यदा ।**
**निर्दयेन परदेशसेविना**
**मारयिष्यथ हि तेन मां विना** ॥3॥

(वि०) इयं नायिकाया एव उक्तिः. हे तोयदाः! मच्छोक भावकजलवितरणोद्यता यत्र वयं प्रियवियुक्ता न अभूम, तादृशं कालमतिवाह्य यत्र क्वचित् यापयित्वा यदा अद्य दयितो गतस्तदा

यूयमागताः; तथा सर्वं कालं दिष्टमथच कृतान्तरूपं येषां ते तथा मतिबाहृया अमनोज्ञमनसः पीडकत्वात् ते च तोयदाश्चेति विग्रहः . अतश्च मां मारयिष्यथ, काक्वा उक्तिः . एवं नाम पुण्यभागिनी भूयासं, येन दयितजनविरहिता भीषणभवदीयचरितावलोकनपरिखिन्नहृदया जीवितत्यागेन अपि सुखमासीना ; अथच दयितेन विना या जीवति सा अवश्यवधार्हैव. यश्च निर्दयः सन् परदेशं सेवते, स चेत् दयिताया हृदयं प्रविष्टः, तत्करतलोपनतमेव मरणम् . नहि असौ जलधरसमये किमपि कार्यं कर्तुं समर्थ इति अवश्यमेक एव क्वचन चिरमास्ते इति. तस्मादस्मासु उपरि प्रेम तावदास्ताम् ; दयामपि यदि अकरिष्यत्, तदवश्यमिहैव आगमिष्यदित्येतावती कष्टपरम्परेति अनेन विश्वासपरिपाटीजनितदौःस्थित्य सूचकेन ध्वन्यते.

(ता) **अहो तोयदाः हे मेघाः यूयम् आगताः स्थ. यदा यस्मिन् काले दयितो वल्लभो गतः विदेशस्थः. किं कृत्वा आगताः सर्वकालमवलङ्ध्य अतिक्रम्य** अतिवाहृय. ह इति कष्टम्. मां मारयिष्यथ विनाशयिष्यश. कथं विना. केन प्रियतमेन. कि भूतेन ? निर्घृणस्तेन पुनरपि कीदृशेन परदेशसेविना परदेशं सेवितुं शीलं भावो यस्य सः परदेशसेविता तेन ।.

**(टि०)** तारानाथटीकायां सप्तमोऽयं श्लोकः.

"सर्वकालमवलङ्ध्ये" ति पाठान्तरं तारानाथेन गृहीतम्. "निर्दयेन" इत्यस्य स्थाने "निर्घृणेन" चेति.

**(वि०)** प्रियतमं प्रति निजावस्थां जिज्ञापयिषुर्भीषणजलदविजृम्भामसहिष्णुर्युक्त्या कथंचिद्वचनात् यदि अमी देशातरं व्रजेयुस्तत् सर्वं सम्पत्स्यते. प्रियतमोऽपि च तद्देशप्राप्तजलधरध्वानाकर्णनेन कदाचित् मदीयामवस्थां स्वयं वा अनुभवेदपि, इत्यभिप्रायेण नायिका इदमाह

बूत तं पथिकपांसुलं घना
यूयमेव पथिशीघ्रलङ्.घनाः ।
अन्यदेशरतिरद्य मुच्यतां
साथवा तव वधूः किमुच्यताम् ॥4॥

[वि0] हे घनाः ! मेघाः, अथच अतिनिविडाः, अत एव हननशीलाः, तं पथिकानां मध्ये पांसुलं निर्मर्यादं निर्दयं ब्रूत. एतदेव तस्य अभिज्ञानं यत् पथिकेषु मध्ये स एव निर्दय इत्यर्थः. यतो यूयमेव पथः शीघ्रं लङ्.घथेत्यनेन कथमितः क्षिप्रं व्रजेयुरिति प्रोत्साहना ध्वन्यते. ब्रूतेति च अध्येषणा इयम्, लङ्.घने च चिरव्रजितस्य अपि झगिति आसादनम्. प्रियतमो हि चिरकालं प्रोषितः, स कथं यो मार्गं लङ्.घयितुं न शक्तस्तेन अद्य इतश्चलितेन लभ्येतेति भावः. किं ब्रूत. अन्यस्मिन् देशे या इयं रतिर्विना अपि कार्यमासक्तिः, अथच वल्लभान्तरेण सह प्रेमविस्रम्भो नहि अन्यथा अम्बुधरकालोऽतिवाह्य इति, सा रतिर्मुच्यताम्. अवश्यं हि तया रत्या भवान् ग्रथित एवेति उपालम्भगर्भा उक्तिः. अद्येति अद्यैवेत्यर्थः अथ कथं प्रेम सविस्रम्भे शिथिलयितुं शक्यस्तर्हि सा तव वधूर्न पुनः प्रियतमा, अपितु शास्त्रसमयपत्नी. किं कथ्यतां न वयमप्रियमावेदयामः, निश्चितं तु प्राणान् नैव धारयेत्. अथवा साथवा तव वधूरित्येतावत् सन्देशवचनमभिधाय किमहं कथं वा भवेयमिति किमलीकविकत्थनेनेति अवश्यमेव न जीवामीत्यर्थः.

[ता0] हे घनाः हे मेघाः तं पथिकं यूयमेवं ब्रूत वदत. किं विशिष्टं पथिकं पांसुलं पांसुर्धूलिः तं लाति आदत्ते इति पांसुलः पुंश्चलः पथिकश्चासौ पांसुलश्च पथिकपांसुलस्तम्. किं विशिष्टा घनाः पथि शीघ्रलङ्.घनाः. किं वदत यथा हे पथिक अन्यदेशरतिरद्य मुच्यताम्. अन्यदेशरतिः अन्यदेशनिवासः. क्व अस्मिन् वर्षासमयेप्रावृषि मुच्यतां त्यज्यताम्. अधुना नागच्छसि चेत् तदा सा तव वधूः किमुच्यतां किं कथ्यतामित्यर्थः.

हंसपङ्‌क्तिरपि नाथ सम्प्रति
प्रस्थिता वियति मानसं प्रति।
चातकश्च तृषितोऽम्बु याचते।
दुःखिता पथिक सा प्रिया च ते।। ।।5।।

[वि] यदि पुनरद्य मार्गे गमनमागमनं च न युज्यते इति शङ्‌क्यते, तदेवं ब्रूतेति नायिका आह पथिक ! नहि भवान् नित्यं पथा गच्छति, अतो यदा तद्देशगतोऽभूत् तदा सा प्रिया श्रूयते स्म। अतश्चातकस्तृषाक्रान्तो जलं याचते, सा च तव याच्ञां करोति। अनेन चातकयाच्ञां प्रति जलस्य कारकता। त्वं तु तदीययाच्ञां प्रति न कारकः। स हि याच्ञां प्रति कारको भवति, यः कदाचिदाशापूरणं करोति। त्वं तु सर्वकालमेवंविधप्रतिकूलाचरणवचञ्चुरेव। तथापि तु याच्यसे। अत एव आह न प्रभुः पर्यनुयोगार्हः। हंसानां सम्बन्धिनी पङ्‌क्तिरतिबहवोऽपि हंसा अद्य आकाशमार्गे मानसं प्रति प्रचलिताः एकोऽपि हि यत्र गच्छति, तत्र अवश्यमपरस्य अपि अनिरुद्धेन पथा भाव्यं; किं पुनर्बहवः। यतश्च तस्य यदेकायतनमाकाशं तदेव हंसानां मार्गत्वेन वर्तते। भूमौ मार्गे को भयसम्भवः। यत्र च अतिदूरं मानसं गन्तुं निर्बुद्धीनामपि हंसानामुद्यमः, तत्र परिमितदेशनिवृत्तिमात्र एव न किमिति सा प्रिया भवतो याचते।

[ता] हे घनाः हे मेघाः तं पथिकं यूयमेवं ब्रूत। हे पथिक, आस्तां तावदन्यो बुद्धिमान् जनः। हे नाथ स्वामिन्। हंसपङ्‌क्तिरपि प्रस्थिता, मानसं प्रति मानसरोवरं लक्ष्यीकृत्य। क्व वियत्याकाशे। अन्यच्च चातकोऽपि तृषितोम्बु याचते चातको जलवाहकः सारङ्‌गो जलकोकिलः। याचते भिक्षते। किम्? अम्बु सलिलम्। किम्भूतश्चातकः ? तृषितः पिपासितः सन्। दुःखिता पथिक सा प्रिया च ते। हे पथिक हे पान्थ। प्रिया च ते तव प्रिया सा दुःखिता वर्तते जननिविरहेणेत्यर्थः।

[टि.] तारानाथटीकायामयं नवमः श्लोकः।

जननिविरहेणेति चिन्त्यम्। स्वजनविरहेणेति पाठः साधीयान्।

**नीलशष्पमभिभाति कोमलं**
**वारि विन्दति च चातकोऽमलम्।**
**अम्बुदैः शिखिगणो विनाद्यते**
**का रतिः प्रिय मया विनाद्य ते॥ 6॥**

(वि.) नीलं शष्पाख्यं तृणं सर्वतो भाति, चातको निर्मलं जलं विन्दति जलं लभते, मयूरकुलं च मेघै केकायुक्तं क्रियते,इत्येतैर्वाक्यैः प्रत्युत इह आगच्छतस्तव किमपि पथि मनोहरत्वमिति ध्वन्यते. नीलं च शष्पमवलोकय तस्तत्सुकुमारतरस्पर्शानुभवसुखितचरणयुगलस्य गगन निपतितामलजलदलितक्लमस्य मुदितमयूररचितकेकाकरणनिर्भर विकस्वरकर्णद्वयस्य अवश्यं सर्वमेव सुखम्. अद्य तु तूष्णीं स्थितस्य मया विना का रतिः, न काचिदिति स्वात्मसौभाग्यसंभावनागर्भा इयमुक्तिः अथच मम ईदृशी अवस्था यतो वर्तते, ततो मां प्रति शष्पं नीलं मलिनस्वभावमपि कोमलं करुणार्द्रमिव भाति. चातकश्च यो नाम्नैव प्रियगगनजलः प्रसिद्धः, सोऽपि जलमिह लभते, न तथा पिबतीति प्रतीयमाना उत्प्रेक्षा. अम्बुदैश्च विरहिहृदयस्फोटनपटुतरगर्जितैरपि ममोपरि करुणावशात् निजसुहृत्कुल माक्रन्दवत् सम्पाद्यते. का पुनर्मया विना मम अभावे का अरतिः कः खेदः, न कश्चित्. तथा मम अभावे भवतः का इयं रतिः कोऽयमनुबन्धः, सा म्रियतामिति. अथच प्राङ्.मया विना तव रतिर्न कदाचिदभूत्, अद्य तु कथं सा रतिः अद्येत्यनेन प्रागत्यन्तप्रेमरसमानसतां कपटेन किल प्रकटितवानसीति ध्वन्यते. अत एव सोत्प्रासं प्रियेति आमन्त्रणमिति उपालम्भगर्भा भणितिः.

(ता.) अतिभाति अतिशयेन शोभते. किम्? नीलशष्पं नवतृणम्. किं विशिष्टं सुकुमारम्. न केवलं नीलशष्पमतिभाति, अपि च विनाद्यते. कोऽसौ ? शिखिगणो मयूरसमूहः. कैः? अम्बुदैः मेघैः. हे प्रिय अद्यास्मिन् काले मया विना तेन का रतिः का प्रीतिः का प्रिया.

(टि.) तारानाथटीकायां दशमोऽयं श्लोकः.

मेघशब्द मुदिताः कलापिनः
प्रोषिताहृदयशोकलापिनः।
तोयदागमकृशा च साद्य ते
दुर्धरेण मदनेन साद्यते ॥ 7 ॥

(वि) अभी ये भवता पुरः परिदृश्यन्ते कलापिनस्ते मेघानां सेचनप्रधानानां सम्बन्धिना शब्देन मुदिताः केकाप्रियत्वात्, तथाच प्रोषितानां कान्तानां सम्बन्धिनि हृदये शोकं लापयन्ति सम्यक् श्लेषयन्ति अवश्यं, तथा प्रोषितानां हृदये शोकं लपन्ति तेषु हि कूजत्सु अवश्यं विरहिण्यः शोकवत्य इति निश्चीयते, तथा प्रोषिताहृदयं शोकेन लापयन्ति द्रवीकुर्वते. सा च ते प्रिया तावकी प्रिया अथच तव दुर्धरेण कामेन पूर्वं हि कामभयभीता यास्त्वमेव शरणमभूः, अद्य तु इह स्थितस्य तव मदनो दुर्धर इति दुर्निवारः सम्बन्धमात्रे षष्ठी, नतु कर्तरि खलर्थ. (2/3/69) इति प्रतिषेधात्. तथा तवैव सन्निहितस्य सा तोयदागमे कृशा अभूत्. आगमिष्यति जलधरसमयः प्रवत्स्यति च प्रियतमः इति रणरणकवती भवत्सन्निधाने कृशा बभूव. अद्य तत्र मध्ये भूयान् कालो गत इति अस्या अद्य हितेन भवितव्यमिति कविनिबद्धदूतीवचनमिदम्. नहि मेघानां स्वयमेव "मेघशब्दमुदिताः" इति "तोयदागम0" इति च स्वातन्त्र्येण कथयितुमुचितम्. "अम्बुदैः शिखिगणो विनाद्यते" इत्यत्र तु प्राक्तनश्लोके मेघमुखसञ्चारिताक्षरा नायिका एव कविना वक्तृत्वेन उपनिबद्धा, इह तु नैवम्.

(ता.) अस्मिन् काले भवति कं कलापिनः कलां पान्ति चन्द्रिकां रक्षन्ति तानि कलापानि विद्यन्ते येषां ते कलापिंनः शिखिनः. कीदृशाः? प्रोषितागतभर्तृकायास्तस्या हृदयम् उरः तत् शोकं लापितुं ग्राहितुं शीलं येषां ते कलापिनः. पुनः कीदृशास्ते ? मेघकृतशब्दमुदिताः घनगर्जितेन तुष्टाः. अपिच अवसाद्यते. का ? तव प्रिया. कीदृशी ? तोयदागमकृशा वर्षाकालदुर्बला. क्व वर्षाकालेनावसाद्यते मदनेन. किं विशिष्टेन? दुर्धरेण दुःसहेनेत्यर्थः. यथा विरहिणी प्रावृषि दुःखिता रोदित्यर्थः.

[टि०] तारानाथटीकायामेकादशः श्लोकः.

**किं क्षमापि तव नास्ति कान्तया**
**पाणडुगण्डपतितालकान्तया.**
**शोकसागरजले च पातितां**
**त्वद्गुणस्मरणमेव पाति ताम्।।**

[वि.] सख्या एव दूतीत्वेन प्रेषिताया इयं भणितिः. आस्तां तावत् प्रेमानुबन्धः. तादृशी अपि या कान्ता लावण्याद्यसाधारणभूता, सा यदि इदृशवत् जायते, तत् किं तया हेतुभूतया क्षमा अपि नास्ति. पाण्डुरच्छाययोः कपोलयोः पतिता अलकान्ता यस्याः, तदीयकपोलतलपाण्डिमानं मलिनस्वभावा अलका अपि प्रेक्षितुं न पारयन्तीत्यर्थः . अथच कान्तेति आमन्त्रणमपि. त्वं यदि तस्या वल्लभस्तया ईदृश्या जनमात्रकृपाभाजनभूतया अपि या सामान्यजनस्य कृपा भवति, सापि न अस्ति तव आत्मनि इयतापि पुरुषगुणं बहुमानं वहतोऽपि. तथापि सा शोकार्णवपानीये मेघसमयवारिणा पातिता भवदीयगुणस्मरणेन एव रक्ष्यते. अथच त्वत्तस्तव सकाशात् पतिता शोके, भवद्विप्रयुक्ता च जाता, शोकजलधौ च निमग्ना सम्पन्नेत्यर्थः चकारादेतत् ध्वन्यते, वस्तुतस्तु त्वद्गुणनामेव सातिशयसम्भोगादीनां स्मरणेन एव शोकेपतिता. अद्यतु तथा कृपापात्रतां प्राप्ता, यदुत तेन निष्करुणेन पातिता अपि त्वद्गुणस्मरणेन एव रक्ष्यते. मम किल स प्रियतमोऽपगतो निर्बहुमानो मां प्रति च दृढतरप्रेमपवित्रितान्तःकरणो नूनं मामेव तदवस्थां यथा पूर्वं त्रातवांस्त्वां तथा त्रास्यते इति त्वद्गुणानां स्मरन्ती सा जीवतीति यावत्. तथा योऽयं सागरे पतितः, सोऽपि अवश्यं गुणस्मरणवृत्या एव रक्ष्यते दृढगुणविरचितरज्ज्ववलम्बनेन जातुचिदुत्तारेयमपि, इत्यर्थः.

[ता.] यथा हे मेघाः तं पथिकं यूयं ब्रूत यत् किं कृपापि दयापि नास्ति न विद्यते. कया कान्तया योषिता सह. किं विशिष्टया पाण्डुपतितालकान्तया

पाण्डु च तौ गण्डौ कपोलौ तयोः पतितालकान्तया कुटिकेशान्तया. अन्यच्च त्वद्गुणस्मरणमेव पाति तां त्याज्यो जीवनोपाय इत्यर्थः. कीदृशीं तां शोक सागरजले अद्य वर्षासु जलपतिताम्. शोकस्य बहुत्वात् सागरजलेनोपमा.

(टि०) तारानाथेऽयं द्वादशः श्लोकः. "क्षमा" इत्यस्यस्थाने कृपेति पाठ इह गृहीतः.

**कुसुमितकुटजेषु काननेषु**
**प्रियरहितेषु समुत्सुकाननेषु।**
**द्रवति च कलुषं जलं नदीनां**
**किमिति च मां समवेक्षसे न दीनाम् ॥ ९ ॥**

(वि) इयं विलापावस्थां यातायाः स्वयमेव नायिकाया उक्तिः. पुष्पितानि कुटजानि येषु वनेषु याः समुत्सुका उत्कण्ठिता मादृश्यस्तासां यानि आननानि प्रियतमवियुक्तानि तेषु तद्विषये नदीनामपि कलुषं जलं गलति अस्मादृशीनां विरहिणीनामाननानि अवलोक्य जडभावानामपि कलुषं जलं गलति, अस्मादृशीनां विरहिणीसरितां शोकाविलं जलं गलतीत्यर्थः. त्वं मां दीनां किमिति समवेक्षसेऽपि न. चकारावपिशब्दार्थौ भिन्नक्रमौ, एको दीनामित्यस्य अनन्तरम्, अपरस्तु समवेक्षसेशब्दस्य

(ता.) हे दूतास्तं पथिकं यूयं ब्रूत अस्मिन् वर्षाकाले मां किमिति न समवेक्षसे नागत्य सम्भावयसि. कीदृशीं माम् ? दीनां कृपणाम्. केषु समुत्सुकाननेषु कीदृशेषु कुसुमितकुटजेषु. कुसुमिताः कुटजा येषु तानि कुसुमितकुटजानि. तेषु कोऽर्थ ? प्रावृट्कालः प्रवर्तत इत्यर्थः. पुनः कीदृशेषु काननेषु समुत्सुकानि उत्कण्ठितानि आननानि मुखानि येषु तानि समुत्सुकाननानि, तेषु केवलं तथाभिधेयेषु नदीनां जले वहति. किं विशिष्टे ? कलुषे अप्रसन्ने ईदृशे काले.

(टि0) तारानाथटीकायामयं त्रयोदशः श्लोकः. उत्तरार्धे "कलुषे जले" इति पाठ इह स्वीकृतः.

**मार्गेषु मेघसलिलेन विनाशितेषु**
**कामो धनुः स्पृशति तेन विना शितेषु।**
**गम्भीरमेघरसितव्यथिता कदाहं**
**जह्यां सखि प्रियवियोगजशोकदाहम् ।। 10 ।।**

(वि.) विसृष्टायामपि दूत्यां तद्वचनाकर्णनादपि न आगत इति शोकाकुलमनसि नायिकायां यदा कदाचित् सखी तत्समाश्वासनाय इत्थमभिहितवती मार्गाणां दुःसञ्चरत्वादसौ न प्राप्तः, तदा पुनरपि नायिकायाः सखीं प्रति इयमुक्तिः सखि! पश्य, मार्गा मेघसलिलेन नाशितास्तथापरोऽयं दोषःअप्रत्ययेषु मार्गेषु शिता इषवो यत्र तादृक् धनुः स्पृशति, शितं शरं सन्धाय आकर्णाकृष्टं मोक्तुमिच्छतीत्यर्थः. तेन विना तद्वियुक्तायाः अथच यदि अहं तमभिसरेयं, तत् मार्गा दुर्ज्ञानाः, तथाविधेषु अपि तेषु दुःसहं स्मरशरभयं स्मरश्च तद्वर्जं शरान् सन्धत्य मामेव ताडयति, अन्यथा कदाचित् तस्यैव गमनमिह सम्भाव्येत. अथ इहस्था एव जलदसमयमतिवाहयामि, तत् गम्भीरेण घनगर्जितेन जातत्रासा तिष्ठामि. अतो हे सखि! कदा अहं प्रियवियोगजं शोकदाहं जह्याम्. अहं च मेघशब्द्व्यथिता, मदनश्च निशितशरपातनोद्यत इति अवश्यं मम जीवितान्तेन भाव्यम्. तच्च कदा भवेत्, यत्र अहं सकलशोकनिर्मुक्ता, सम्पद्येयेति. केचित् सप्रियेति पठन्तः सहृदयाः कथमद्य अपि सखी दूतीत्वेन विसृष्टा सा अपि न आगता तत् नूनं तत्सम्भोगरसलालसया तया भाव्यमिति सम्भावयन्त्यां नायिकायां कयाचित् वयस्यया मार्गदौरात्म्ये तदागमनविघ्नकारिणि उपन्यस्ते स्वयं नायिकाया इदं सूक्तमिति अभ्यूचुः. मार्गास्तावत् नष्टाः, तेन च विना मदनः प्रहरतीति तन्निकटात् चलितुं न युज्यतेऽस्याः. अथच तत्सम्भोगरसवृत्तिस्मरणेनैव मदनकदर्थनार्हा अतोऽहं

यदि, तत् किल मञ्जरीभिर्भवान् सकलवनमध्ये श्रेष्ठो बह्वीभिः कान्ताभिस्तु परिवृत इति शृङ्गारिणि भवति बहुमान इत्यर्थः, तथापि सयौवनानां युवतीनां तु नेत्रोत्सवः. यदा किल अहं युवतिः प्रियसंयुक्ता त्वामवलोकितवती, तदा लोकोत्तरनयनानन्दवती अभूवम्, अद्य त्वमेवंविधबहुतरवल्लभापरिवृतो भूत्वा कथं मां प्रियवियुक्तां त्रातव्यां दर्शनमात्रेण अपि मदनपरवशां करोषीति, वाक्यार्थः.

(ता.) हे कामनिवासर्ज ! त्वां भवन्तं यत् ससर्ज सृष्टवान्. कः प्रजापतिः स्रष्टा. सुतरां तत् साधु शोभनं निवसनं निवासः आश्रयः. कस्य? कामस्य निवासः. स चासौ सर्जश्च. सर्जोनाम वृक्षविशेषः, कामनिवासर्जः. कीदृशः त्वं प्रवरः प्रधानः. केषाम्? मध्ये वनानां कामिकत्वात्. प्रवरमञ्जरीभिः कुसुमितलाभिः न केवलं मञ्जरीभिः प्रवरो नेत्रोत्सवश्चासि. नेत्राणाम् उत्सवो नेत्रोत्सवः आनन्दस्त्वं भवसि. केषाम्? स यौवनानाम्. सहयौवने वर्तते स यौवनाः तेषां सयौवनानां ससर्जकुसुमानि तरुणां कोरकानि भवन्तीत्यर्थः.

(टि.) ताराचन्द्रेऽयं षोडशः श्लोकः.

**नवकदम्ब शिरोऽवनतास्मि ते**
**वसति वो मदनः कुसुमस्मिते ।**
**कुटज किं कुसुमैरवहस्यते**
**प्रणिपतामि च दुष्प्रसहस्य ते.. ॥ 11 ॥**

(वि.) यदा सर्जतरोरपक्रान्ता नायिका झगिति कदम्बमवलोकयति, तदा प्राक्तनमदनभयभीतिमती झगिति आह

हे नवकदम्ब ! इदानीमेव अवलोकिताननुभूतत्वदीयप्रतापा अहं तुभ्यं शिरसा अवनता अस्मि. एवं यावत् भणति, तावत् तदीयकुसुमविलोकनजनितरणरणका आह युष्माकं पुष्पविकासे कामो वसति, मया ज्ञातं सर्जस्यैव इदं वैषम्यं यावता त्वमपि एवमेव, सर्वेषामेकयोगक्षेमतेति

साध्या. प्रियेण च सह वियोगः तथा तस्य साध्या. इदानीं यः प्रियस्तेन सह वियोगः, तज्जं शोकदाहं कदा जीवितान्तेन अपि जह्याम्.

[ता.] हे सखि कदाहं जह्यां त्यजेयम्. प्रियवियोगजशोकदाहं प्रियो वल्लभः तस्य वियोगो विरहः तत्. किं विशिष्टाऽहम् ? गम्भीरमेघरसितव्यथिता केषु सत्सु ? मार्गेषु पथिषु, कथं भूतेषु, विनाशितेषु विनाशं प्रापितेषु. केन मेघसलिलेन. अन्यच्चकामः कन्दर्पः धनुः स्पृशति. कथं विना तेन वल्लभेन. किं. विशिष्टं धनुः ? शितेषु शिताः तीक्ष्णाः इषवो बाणा यस्य तत् शितेषु . तेन किमुक्तं भवति वर्षाकाले बलवान् कामः.

[टि०] ताराचन्द्रेऽयं चतुर्दशः श्लोकः.

**सुसुगन्धितया वने जितानां**
**स्वनदम्भोधरवातवीजितानम्।**
**मदनस्य कृते निकेतनानां**
**प्रतिभान्त्यद्य वनानि केतनानाम्.॥ 12 ॥**

[वि.] यदा विनोदनार्थं सख्या उद्यानोपवनं नीता, तदा तद्दर्शनद्विगुणतरोपचितविलापावस्थाया नायिकाया इदं सूक्तम्. केतननाम्नां तरूणां वनानि अद्य विराजन्ते. कीद्शानाम्. सुष्ठु सौरभेण वनमध्ये केनचिदजितानां, तथा गर्जतां मेघानां पवनेन वीजितानां प्रबोधितानाम्. अत एव कामस्य कृते निकेतनानां सङ्केतधाम्नाम्. अयमभिप्रायः केतनवनानि मदननिवेदशस्थानानीति अतिसुकुमारणि, जलधरसिततद्विमुक्तशीकरासार सहितश्च पवनस्तेषामेव प्रबोधनहेतुतया सुकुमारतामाप्त इति किमत्र जलदसमये मार्गवेषम्यम्, तत् नूनमेव केतनवनावलोकनप्रबोधितमदनस्थान सुखसंस्कारः प्रियतम आगमिष्यतीति सम्भावयन्त्या नायिकाया भणितिः प्रतिभातीति. अपरे तु बनशब्दपौनरुक्त्यममृष्यमाणा मदनस्य अवने रक्षणे कृते अजितानां केतनानां वनानि शोभन्ते इति आहुः. अथवा सौरभेण ये

वने एकान्ते यत्र अपरः परित्राता न सम्भाव्यते तत्र जिता अपहृतधैर्यवृत्यः कृता विमोहिताः केचन विरहिजनाः, तेषां दैववशात् जलधरशिशिरपवन प्रबोधितानामपि पुनरपि एतानि केतनवनानि कामस्य कृते करणाय प्रतिभान्ति मदनातङ्ककरणादृते न एतेषां किमपि प्रयोजनमिति यावत्. स्वनशब्देन करुणावशात् शब्दायमानता ध्वन्यते. यदा स्वनन्तो गर्जनतोऽम्भोधरा यत्र संजातकृपाः संवृत्ताः, तत्र अमीषां केतनवनानां का इयं निष्करुणता.

(ता.) यथास्मिन् वर्षाकाले वनानि प्रतिभान्ति. केतकानां किं विशिष्टानां विराजितानां विशेषदीप्तिं प्रापितानां कैः नववारिकणैः नवं च तत् नववारि, तस्य कणैः तैः नववारिकणैः अभिनवजलशीकरैः पुनरपि कीदृशानां स्वनदम्भोधरवातवीजितानाम्. अम्भो जलं तं धारयन्ति इति अम्भोधराः स्वनन्तश्च ते अम्भोधरास्तेषां वाताः समीरस्तेन वीजितानाम्. पुनरपि किं विशिष्टानां निकेतनानां गृहाणाम्. कस्य मदनस्य. वर्षाकाले केतकीकुसुमानि सुगन्धानि भवन्ति ततः कारणात् तत्र काले निवसन्तीत्यर्थः.

(टि.) ताराचन्द्रेण पूर्वार्धे नववारिकणैर्विराजितानाम् इति पाठः गृहीतः उत्तरार्धे च केतकानामिति. तस्यायं पञ्चदशः श्लोकः.

**तत्साधु यत्वां सुतरुं ससर्ज**
**प्रजापतिः कामनिवास सर्ज.**
**त्वं मञ्जीरीभिः प्रवरो वनानां**
**नेत्रोत्सवश्चासि सयौवनानाम्** ॥ 13 ॥

(वि.) इयमनन्तरवदेव उक्तिः. हे सर्जनामधेय ! प्रजापतिर्यत् त्वां ससर्ज शोभनं तरुं, तत् साधु, यतस्त्वं कामस्य निवासः. काकुरियमेवं ध्वनति प्रजानां किल पत्या अवश्यं प्रजाहितकारिणा भवितव्यम्, एवंविधहृदयदाहवितरणानिःशेषितनिखिलजन्तोः कामस्य निवासभूतं भवन्तं निर्मिमाणेन प्रजापतिना सुष्ठु प्रजापतित्वमुद्दर्शितं, त्वयि दृष्टमात्र एव मम कापि व्यथा विजृम्भते इत्यर्थः. अथ एवमपि जानती किमिति मामवलोकितवत्यसीति

सर्वथा मम हताशाया नयनविषयताक्षमं न किञ्चित् समस्तीति बहुवचनेन ध्वन्यते. इत्थमाकारयन्ती एव नायिका यदा कुसुमितं झगिति कुटजमवलोकयति, तदा मन्यते नूनं मामयं सव्रतो हि हतभागधेयामपहसतीति तत आह हे कुटज! किमिति अवाङ्.मुखं कृत्वा हस्यते. कुसुमितोऽपि प्रदेशोऽवश्यं धराभिमुखः; यश्च सन्निहित एव परमपहसति, सोऽपि अवाङ्.मुख एव . अतश्च त्वयि उपचीयमाने बहुतरव्यथा. ते दुःसहस्य प्रणाम एव शोभन इति काकुः अत एव ईप्सिततमत्वाभावः सम्बन्धषष्ठ्या व्यज्यते. किंकुसुमैरिति कुत्सितैः परातङ्.कवितरणचतुरैः पुष्पैरवहस्यते इति सोत्प्रासं काक्वा ध्वनितोऽर्थः.

(ता.) हे नवकदम्ब ! ते तव शिरसा प्रणतास्मीत्यर्थः यतः कारणात् ते तवस्मितं हसितं कुसुमस्मितम्. अन्यच्च कुटज किम् अवहस्यते. कैःकुसमैः. यतस्ते निपतितास्मि. अति दुष्प्रसहस्य कथम्भूतस्य अतिशयेन दुःखेन प्रसह्यते सः तस्य अतिदुष्प्रसहस्य कुटजतरोः. तत्र कोऽभिप्रायः. कुटजः प्रावृषि दुःसहो भवति (इति)..

(टि.) ताराचन्द्रे सप्तदशोऽयं श्लोकः.

**तरुवर विनतास्मि ते सदाहं**
**हृदयं मे प्रकरोषि किं सदाहम्!**
**तव पुष्पनिरीक्षितापदेहं**
**विसृजेयं सहसैव नीप देहम्..** 14

(वि.) हे नीपाभिधान तरुश्रेष्ठ! तव सर्वकालमहं प्रणता, तत् किमद्य मम हृदयं दाहयुक्तं प्रकर्षेण करोषि. अन्येऽपि तरवो न एवं मा दहन्ति यथा त्वं सर्वकालमभिष्टुतोऽपि, सर्वथा अयं भागधेयविपर्ययः. अथच तव सदा अहं प्रणता येन ईदृशः. उपकारस्त्वत् सम्भाव्यते, त्वदीयपुष्पैर्निरीक्षिता देहं विसृजेयम्. कीदृशम् . अपदेऽकाण्ड एव ईहा दूतीविसर्जनतत्प्रतिपालनमुधा विनोदनप्रभृतयो यस्य तम् . अहं तावत् तादृगुपकारिभवदीयकुसुमावलोकनेऽपि असमर्था, तानि तु यदि महापुरुषतया एवं विधामवस्थां प्राप्तां

मामवलोकयेयुः, तत् चिरवाञ्छितजीवितत्यागमनोरथेन अपि झगिति युज्येयम्. अतस्तव सदा नता अस्मि. न च एवं सम्भावनीयम् अहितो हृदयादाहकारी कथं प्रणम्यते इति यतः किं त्वं हृदयं सदाहं करोषि, काक्वा न एवमित्यर्थः. निजेन एव विरहहुतवहेन मम दाहकेन अपि दग्धस्य किं दह्यते इति सम्बन्धः. यदि तु अहंशब्दपौनरुक्त्यं सहृदयाः क्षमन्ते तदा एवं व्याख्या आपदे विषमविपद्वहनार्थमेव केवलं यो मम देहस्तं त्यजेयमिति. तथा नीप तरु र तव नता अस्मि. एवमुक्त्वा दुःसहतया द्वितीयवाक्यमाहदाहयुक्तं मम हृदयं प्रकरोषि, पुनरपि विलापवशात् विचिन्त्य ब्रूतेकिं यथा अद्य, तथा सर्वकाले त्वत्पुष्पेक्षिता अहमकाण्ड एव देहं त्यजेयं, काक्वा नैवेत्यर्थः.

(ता.) हे तरुवर नीप कदम्ब ! ते तव सदा सर्वदा विनतास्मि. अहम् एवं विज्ञाय ते मम हृदय किं सदाहं करोषि यतस्तव कुसुमनिरीक्षणे अपदे अप्रस्तावे देहं वपुरहं विसृजेयं परित्यजेयम्. कथम् ? सहसेति. एतेन किमुक्तं भवति ? यथा वर्षाकाले बलवान् भवति नीपः न केवलं .. कौदुः प्रसवोऽपरो नीपोऽपि प्रियरहितानां दुष्प्रसहो भवति.

(टि.) उत्तरार्धे ताराचन्देण "तव कुसुमनिरीक्षणेऽपदेऽह" मिति पाठः स्वीकृतः. तस्यायमष्टादशः श्लोकः.

**कुसुमैरुपशोभितां सिते**
**घनमुक्ताम्बुलवप्रहासितैः ।**
**मधुनः समवेक्ष्य कालतां**
**भ्रमरश्चुम्बति यूथिकालताम्** ॥15॥

(वि.) अयं भ्रमरो भ्रमणशीलो यूथिकां चुम्बति, मदीयप्रियतमस्तु पथिक एकत्र एव कश्चित् स्थितो मम नाम अपि न अवेक्षते इति. तां कीदृशीं यूथिकाम् ? सितैर्बद्धैर्न तावत् विकसितैः, ततोऽनन्तरं तु घनैर्मुक्तास्त्यक्ता येऽम्बुलवास्तैः करणभूतैः प्रहासितैः कुसुमैरुपलक्षिताम्. अथच घना मुक्ताफलसदृशा ये जलकणाः, तत्कृतानि यानि प्रहासितानि

प्रहासितत्वोत्पादितानि निजछायास्फुरणानि यैः पीतानि अपि सन्ति शुक्लानि जातानि कुसुमानि. किं कृत्वा. मधुनो मकरन्दस्य कालतामत्यन्तपरिपाकरसोत्पनां विलोक्य; अथच यो नायकश्चिरात् कान्तामुपभुङ्.क्ते., सोऽपि मधुनः पानगोष्ठयाः कालतामवसरप्राप्तिमवलोक्य परिचुम्बति काल इति मत्वर्थीयाकारान्तोऽपि, तथा सा अपि कान्ता धम्मिल्लपुष्पैर्घनैर्मुक्ताफलैर्विरहस्मरणानन्दादिकोत्पन्नैश्च अम्बुललवैर्वाष्पै र्हर्षचाट्वादिजैः प्रहसितैः सितैर्बद्धैर्व्यामिश्ररूपतया स्थितैः परस्परसंश्लिष्टैरुपलक्षिता भवति किलकिञ्चतचेष्टालङ्.कारयोगिनी भवति विशेषतः पानगोष्ठ्यवसरे. यदुक्तं

"शुष्कं मुहुः प्ररुदितं क्षणमश्रुपातः.
क्रोधो मुहुर्हसितमाशु...............

इत्यादि . अत ईदृशी कदा अहं प्रियेण परिचुम्ब्यमाना भूयासमित्यर्थः.

(ता.) भ्रमरो भृङ्.गश्चुम्बति आस्वादयति. किम्? यूथिकालताम्. कीदृशीम् ? उपशोभिताम्. कैः ? कुसुमैः पुष्पैः कीदृशैः शुभ्रैः सितैः . पुनः कीदृशैः ? घनमुक्ताम्बुलवप्रकाशितैः घनेन मुक्तं परित्यक्तं तच्च तत् अम्बु. जलम्. तस्य लवाः कणाः तैः प्रकाशितानि, तैः घनमुक्ताम्बुलव प्रकाशितैः. किं. कृत्वा ? समवेक्ष्य दृष्ट्वा. कां कालताम् अवसरम् कस्य वसन्तस्य मधुनः.

टि.) ताराचन्द्रेऽयमेकोनविशंतितमः श्लोकः.

**निचितं खमुपेत्य नीरदैः**
**प्रियहीनहृदयावनीरदैः ।**
**सलिलैर्विहतं रजः क्षितौ**
**रविचन्द्रावपि नोपलक्षितौ** ॥6॥

(वि.) इदं नायकविसृष्टायाः प्रतिदूत्या - वचनम्. मा त्वमधृतिं कार्षीः, मार्गवैषम्यादेव असावियन्तं कालं न आगतः. तथाहि नीरदैर्मेघैरुपेत्य सर्वतोदिक्कं सघङ्.ट्य खं गगनं निचितम्. कीदृशैः. प्रियैः प्रियाभिश्च ये

(ता.) हे कुन्दसमानदन्ति ! हंसाः चक्राङ्.गाः द्रवन्ति गच्छन्ति. कस्मात् नदन्मेघभयात्. गर्जन...साध्वसात् अद्याधुना. निशामुखानि चन्द्रवन्ति शशियुक्तानि. तथा शिखिनो मयूराः नदन्ति शब्दयन्ति. कथम्भूताः? नवाम्बुमत्ताः. नूतनजलेन मत्ताः हृष्टाः. एतत् सर्वं कस्मिन् काले ? मेघागमे मेघानामागमे तस्मिन् वर्षाकाले, कुन्दसमानदन्ति व्याख्यातमेतत्. चक्राङ्.गोमानसौकस इत्यमरः.

(टि.) ताराचन्द्रेऽयं द्वितीयः श्लोकः.

**मेघावृतं निशि न भाति नभो वितारं**
**निद्राभ्युपैति च हरिं शुभसेवितारम्।**
**सेन्द्रायुधश्च जलदोऽद्य रसन्निभानां**
**संरम्भमावहति भूधरसन्निभानाम् ॥ 17 ॥**

(वि.) रात्रिसमयेऽपि गमनागमने न युज्येते, यतो रात्रिसमये वितारं विगततारापटलं नभो न भाति यतो मेघावृतम् यच्च तया उक्तं "पथिकपांसुलोऽसौ मामुपेक्षते" इति, तदपि न युक्तं; शुभसेवितारमकलुषचरितमपि भगवन्तं हरिं निद्रा अभ्युपैति अशक्नुवती विरहं सोढुं नायकमभिसरति प्रत्युतेत्यर्थः. इन्द्रायुधयुक्तजलदो रसन् शब्दायमान इभानां करिणां पर्वतसदृशानां संरम्भं संरब्धतामावहति समन्तात् दर्शयति. यः किल अतिसुकुमारतया सुप्रसिद्धो जलदः, सोऽपि अन्यानुल्लघङ्.नीयेन शक्रायुधेन वज्रेण सातिशयभीषणः सम्पन्नः सादिना हतानां करिणां सादृश्यमुद्वहतीत्यर्थः अथवा मेघः शब्दायमान इभानां करिणां पर्वतसदृशानां संरम्भं जनयति प्रतिगर्जनशङ्.कयेति तेऽपि क्षुभिताः सम्पन्ना इति सर्वथा सुसकङ्.टाः पन्थानः.

(ता.) हे सखि! तथा निशि रात्रौ न भाति शोभते निशा निशीथिनी रात्रिरित्यमरः. किं तत्. नभः आकाशम्. वितारं विगतास्तारका यत्र तत्. निद्रापचयश्चावभ्युपैति प्राप्नोति. कम् ? हरिम् विष्णुम्. कीदृशं

विहीना वियुक्तास्तेषां हृदयावनीं मनाभूमिं रदन्ति विलिखन्ति. एवं तावत् सर्वतोदिक्कं दुष्प्रेक्षं क्षितौ भूमौ रजः सलिलैर्विहतम्. आस्तां तावदन्यत् सलिलेन अभिभूयते रजोमात्रमपि न अवशिष्टमित्यर्थः.

(ता.) प्रोषितप्रमदयेदमुच्यते इति षष्ठ श्लोकादन्वयः. **प्रोषितप्रमदया** विदेशगतभर्तृकया सख्या अग्रतः इदं निचितमित्यादिं वक्ष्यमाणं चोच्यते. हे सखि! कीदृशि, कुन्दसमानदन्ति! कुन्दपुष्पसमानाः दन्ता यस्याः सा, तस्याः सम्बोधनम्. निचितं व्याप्तम्. आकाशं खम्. कैः नीरदैः. किम्भूतैः नीरदैः. प्रियहीनाहृदयावनीरदैः प्रियेण वल्लभेन हीना रहिता, तस्या हृदयं चित्तं तदेव भूमिस्तं रदति विदारयन्ति. तासां मनोदाहकैरित्यर्थः. किं कृत्वा? निचितमुपेत्यागत्य तथा सलिलैर्जलैर्निहितं स्थापितम्. किं तत् ? रजो धूलिः कस्याम् ? क्षितौ भूमौ. तथा रविश्चन्द्रावपि नोपलक्षितौ सूर्यमृगाङ्कौ मेघैराच्छादितत्वान्न दृष्टौ.

(टि.) ताराचन्द्रटीकाया अयं प्रथमः श्लोकः. "प्रियहीनाहृदयावनीरदै" रिति तत्र पाठः. अभिनवगुप्तस्य पाठश्चिन्यः, छन्दोभङ्गात्.

**हंसा नदन्मेघभयाद्द्रवन्ति**
**निशामुखान्यद्य न चन्द्रवन्ति।**
**नवाम्बुमत्ताः शिखिनो नदन्ति**
**मेघागमे कुन्दसमानदन्ति ॥ 18 ॥**

(वि.) हे कुन्दकुसुमसदृशदशने ! परिवर्जितताम्बूलादिसम्भोगे ! प्रतिदूत्याश्चैव इयं नायिकां प्रति उक्तिःएवं नाम मेघाः शब्दायन्ते यत् हंसा अपि पलायन्ते, रात्रावपि न सञ्चरणे युज्यते यतश्चन्द्रयुक्तानि तन्मुखानि न भवन्ति, एते च शिखिनो मयूरा उद्गतप्रहर्षवशात् शब्दायन्ते. एतेन तत् प्रत्युक्तं यत्तु नायिकया पूर्वमुक्तं.

"हंसपंक्तिरपि नाथ सम्प्रति."

इत्यादिना मार्गसौकुमार्यं, तदेव हि प्रत्युत रणरणकप्रदीपकं मार्गसङ्कटतां करोतीत्यर्थः.

सुखसेवितारस्तम् अथवा निद्रा कथम्भूता सुखसेविता. सुखेन कल्याणेन सेविता श्रिता . अरं शीघ्रम् अभ्युपैति. तथा जलदो मेघः. संरम्भमाटोपम्. आवहति. क्वाधुना. जलं ददातीति जलदः. कथम्भूतः? सेन्द्रायुधः. सह इन्द्रचापेन वर्तते इन्द्रचापसहितः. किं. कुर्वन्. सन्, गर्जयन्. खम् इभानां गजानां, कथम्भूतानां भूधरसन्निभानां गिरितुल्यानाम्. नभोऽन्तरिक्षं गगनमित्यमरः विष्णु नारायणो हरिःइति धनञ्जयीनाममाला. लघु क्षिप्रमरं द्रुतमित्यमरः. इन्द्रायुधं शक्रधनुरित्यमरः. एतत् सर्वं प्रोषितप्रमदयेदमुच्यते.

[(टि.) ताराचन्द्रेऽयं तृतीयः श्लोकः.

**सतडिज्जलदार्पितं नगेषु**
**नददम्भोधरभीतपन्नगेषु।**
**परिधीररवं जलं दरीषु**
**प्रपतत्यद्भुतरूपसुन्दरीषु** ॥७॥

(वि.) प्रतिदूत्या एव इयमुक्तिर्नायिका यदा एवमाह ननु अहमेव तत्र यास्यामीति, तदा तां प्रति. दरीषु गुहासु अपि अन्तःस्थिता या अद्भुतरूपसुन्दर्यस्तासु अपि उपरिजलं पततीति व्यधिकरणसप्तम्यौ. कीदृक् जलम्. सह विद्युद्भिर्जलं ददति ये, तैर्मेघैरर्पितं, न ते जलमात्रं ददति, यावत् विद्युतोऽपि अतिभीषणा अर्पयन्तीति. क्व. नगेषु गिरिषु गर्जन्मेघत्रस्तसर्पेषु. अपरस्य ये त्रासदायिनस्तेऽपि यतो जलधररसितात्. त्रस्यन्ति, तत्र का वार्ता भवादृशीनां मालतीकुसुमसुकुमारमनसामिति तात्पर्यार्थः. अन्यच्च किं भूतं जलम्. दरीषु अन्तः परितः समन्तात् धीरो गम्भीरो रवो यस्य, कन्दरासु अन्तः प्रतिशब्देन द्विगुणीभूत इत्यर्थः तेन एषा अपि आशा न अस्ति तोयदजलपटले गगनात् निपतत् कचन गुहामुखेऽतिवाह्य पुनरपि गमिष्याम इति.

(ता.) निपतन्ति (प्रपतति?) किम्? जलम् केषु पर्वतेषु. कीदृशं जलम् ?

सतडिज्जलदार्पितम्. सह तडिता वर्तते सह तडित्. स चासौ जलदः तेन अर्पितम्. कीदृशेषु नगेषु. स्वनदम्भोधरभीतपन्नगेषु. स्वनन्तश्च ते अम्भोधराश्च तेभ्यो भीताः पद्भ्यां न गच्छन्तीति पन्नगाः येषु ते. परिधीररवं परि समन्तात् धीरो गम्भीरो रवो यस्य तत्. कासु? दरीषु गुहासु. कथम्भूतासु ? अत्यद्भुतरूपसुन्दरीषु. अत्यद्भुतरूपाः सुन्दर्यो यासु तासु.

(ता.) ताराचन्देऽयं चतुर्थः श्लोकः. पूर्वार्धेऽस्य टीकायां "स्वनदम्भोधरः" इति पाठः.

**क्षिप्रं प्रसादयति सम्प्रति कोऽपि तानि**
**कान्तामुखानि रतिविग्रहकोपितानि।**
**उत्कण्ठयन्ति पथिकान् जलदाः स्वनन्तः**
**शोको विवर्धयति च तद्वनितास्वनन्तः.** ॥ 20 ॥

(वि.) एवमेताभिरुक्तिभिः प्रियतमागमनं दुर्घटमिति अवगते आस्थाबन्धो नायिकाया विजाघटीतीत्यभिप्रायेण सा एव पुनराश्वाससम्पादनाय अस्य माध्यस्थ्ये विशेषानुद्देशात् तदीयहृदयशोकशिखिशमनशक्तामुक्तिमभिधत्ते कोऽपि अनिर्वर्णनीयपुण्यसम्भारबृंहितः सम्प्रति जलदसमये तानि कान्तामुखानि निरतिशयसौन्दर्यवन्ति रतिविग्रहेण प्रणयकुपितेन सञ्जातरोषाणि तथा यानि तदीयवियोगजनितपाण्डिम्ना अद्य असाधारणघर्मसुन्दराणि क्षिप्रमनायासेन एव प्रसादयति त्वामवश्यं प्रसादयतीति यावत्. ननु न अद्यापि असावागतस्तत् कथमेतत्. आह शब्दायमाना हि जलधराः पथिकान् रणरणकवतः कुर्वन्ति निश्चितं दिनाद्दिनमुपचीयमानजलधरध्वानाकर्णनेन परिवर्धितोत्कण्ठः प्रियतमस्तावदागच्छतीति यावत्. ननु प्रियतमाः कथं शीघ्रं प्रसीदेयुः. आह तद्वनितासु पथिकदयितासु तथा शोको विवर्धति विवृद्धवदाचरति यथा अनन्तः सम्पद्यते. चकारेण एवं ध्वन्यते यत् तदेव रसितं तासां

शोकविवृद्धौ कारणमिति

(ता.) कोऽपि शब्दः सम्भावने. कोऽपि पुरुषः तानि कान्तामुखानि, भार्यावदनानि. सम्प्रति अधुना. प्रसादयति तोषयति आवर्जयति यावत्. यानि रतिविग्रहकोपितानि. जलदाः स्वनन्तं पथिकानुत्कण्ठयनित. तद्वनितासु पथिकवधूषु अनन्तोऽपरिमाणः शोको वियोगो दुःखं समुद्वहति विवर्धते. प्रोषितप्रमदयेदमुच्यते.

(टि) ताराचन्द्रेऽयं पञ्चमः श्लोकः.

(वि.) अत्र केचिदिति पठन्ति

**तासामृतुः सफल एव हि या दिनेषु**
**सेन्द्रायुधाम्बुधरगर्जितदुर्दिनेषु ।**
**रत्युत्सवं प्रियतमैः सह मानयन्ति**
**मेघागमं प्रियसखि श्वसमानयन्ति** ॥ 21 ॥

अयं श्लोकोऽत्रत्य इव न लक्ष्यते, पुस्तकेषु केन कारणेन गत इति न विद्मः. तथाहि पूर्वश्लोकौचित्यं तावदर्थेन न भजते तासामेव सफल ऋतुर्वर्षाख्यो याति या सेन्द्रायुधैरम्बुदैर्दुर्दिनेषु प्रियतमैः सह रत्युत्सवं मानयन्ति. अन्यथा किल हे प्रियसखि ! मेघागमं श्वसमाः सारमेयप्राया अपि नयन्ति, इति व्याख्यायां प्राक्तने नवे ? यमकमेव दुर्लभम्. दिनदुर्दिनशब्दाभ्यामर्थपौनरुक्त्यमपि दुर्धरम्. यान् अस्तं गच्छन्निनो मार्तण्डो येषु दुर्दिनेषु,इत्यपि व्याख्याने तासामिति अपेक्षितो यदर्थो दुरुपपादः.

तासामिति तु अनपेक्षितयदर्थे पदव्यङ्ग्ये ध्वनौ व्याख्यायमाने उत्तरवाक्यं खण्डं गच्छेत् चर मारेचा न्यथेति ? मध्ये शास्त्रन्यायोचितः काव्यामृतकालुष्यैककारणमध्येतारः कवयः श्वसमा मेघागमं नयन्तीति परमनौचित्यम्. नव एवंविधेन अनौचित्येन कुलकपरिसमाप्तिः क्रियमाणा सहृदयचेतःसु रोमन्थादृते किञ्चित् विदध्यात्. श्वसितीति तु

श्वासस्तद्वदाचरतीति क्विप् ततोऽपि ताच्छील्यादिविवक्षायां चानश्. ततः प्रियसखीशब्देन सम्बन्धः प्रागेव वा तथापि न किञ्चिदर्थस्य पौष्कल्यम्, कष्टकल्पनायासं सत्. क्व. प्रियसखिष्विति सप्तम्या समास इति बहुवचनान्तेऽपि न कश्चित् कृतः सम्बन्धः. अन्यथापाठकरणमपि क्लेशमात्रफलमेव .किञ्च अत्र कर्ता महाकविः कालिदास इति अनुश्रुतमस्माभिः नच अस्य काव्ये तृणमात्रमपि कलङ्कपात्रमुत्पेक्षितवन्तो मनोरथेऽपि सुप्तेऽपि सहृदयाः. तस्मात् प्राक्तन एव परिसमाप्तिश्लोकः. साच सख्या प्रतिदूतीभूतया नायिकाया आस्थाबन्धदाढर्योत्पादना युज्यते. उत्पन्नसमाश्वासा हि हृदयं स्थापयन्ती विप्रलम्भयितुं शक्या स्यात्.

**"आस्थाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां.**
**सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणाद्धि."**

इतिदृष्ट्या. तेन अस्य परिसमाप्तिधुरोद्वहस्य अपि धुरन्धरत्वमविकलमेवेति. तदिदं युक्तमयुक्तं वेति स्वयमेव विदाङ्कुरुत सहृदयाः.

**(ता.)** यथा हे घनास्तं पथिकं यूयमेव ब्रूत. तस्याः स्त्रियः रत्युत्सवः रत्युत्सवे प्रियतमैः सहमानयन्ति भुजन्ति. कस्मिन् काले ? मेघागमे. केषु दिवसेषु? सेन्द्रायुधाम्बुधरगर्जितदुर्दिनेषु शक्रचापजलदस्तस्फुटं न केवलं मानयन्ति, प्रियसखीश्च मानयन्ति, पूजयन्ति, तुल्याः कुर्वन्ति. तासामृतुः सुफला (सुफलः).

**(टि.)** उतरार्धे "मेघागमे प्रियसखीश्च समानयन्ति" इति ताराचन्देण स्वीकृतः पाठः सुश्लिष्टतरः .

अतः परं ताराचन्द्रटीकाया मातृकायामयं श्लोकः अधिकः प्राप्यते, परन्तु ताराचन्द्रेण अस्य व्याख्या न कृता .

**एतन्निशम्य विरहानलपीडिताया**
**स्तस्या वचः खलु दयालुरपीडितायाः.**
**तं स्वारवेण कथितं जलदैर्न मोघैः**
**प्रत्याययौ सदनभूतदिनैरमोघैः** ॥22॥

**भावानुरक्तललनासुरतैः शपेय**
**मालभ्य चाम्बु तृषितः करकोशपेयम्.**
**जीयेय येन कविना यमकैः परेण**
**तस्मै वहेयमुदकं घटकर्परेण** ॥23॥

कविना औद्धत्यप्रकटनाय सहृदयजनमानसरञ्जनाय प्रतिज्ञा इयमुपनिबध्यते. सञ्जातपिपासः करकोशेन हस्तसम्पुटेन पेयं पानार्हं तावदवसरप्राप्तमपि जलमत्यन्ताभिलाषौत्सुक्ये पातुमदोहयोग्यमपि प्रत्युत आलभ्य दुग्ध्वा सहजप्रेमप्रणयिनीसम्भोगरसैश्च शपेयम्. अत्र शरीरस्पर्श नाख्यस्य उपालम्भस्य न अतीव स्पष्टतेति "शप उपालम्भेन" (वा.911) इति आत्मनेपदाभावः. येन परेण कविना यमकैर्जीयेय, तस्मै घटकर्परेण जलं वहेयम्. कर्परशब्देन सातिशयक्लेशसमुद्वहत्वमात्मनि उच्यते. अत्र च यमकानां विप्रलम्भशृङ्गाररसातिशयविघ्नभूतानामपि मया तथा अपृथग्यत्ननिर्वर्त्यतया निबन्धः कृतः येन प्रत्युत रसपरिपोषकविशिष्टव्याख्याभिधायिपदपरम्परालाभो यमकैः सम्पन्नः तदुक्तम्.

"रसाक्षिप्तया यस्य बन्धः शक्यक्रियो भवेत्.
अपृथग्यत्ननिर्वर्त्यः सोऽलङ्कारो ध्वनौ मतः."

इति एतया च प्रतिज्ञया एतत् परिहृतम्.

"ध्वन्यात्मभूते शृङ्गारे यमकादिनिबन्धने.

शक्तावपि प्रमादित्वं विप्रलम्भे विशेषतः..

इति. नहि इयं राजाज्ञा, अपितु रसबन्धविघ्नकारित्वप्रमादः परिहार्यः. अत्र च प्रत्युत आत्मपरिपोषकत्वमेव उक्तेन प्रकारेण यमकानामिति. कवीनां शक्तिरेव बलीयसी, सा एव लोकोत्तरा व्युत्पत्तिरिति अभिधीयते ; नतु अन्या कविशक्तेर्व्युत्पत्तिर्नाम काचित्. यदुक्तं मया एव रौरवेविचारे

**"न वै दोषा दोषा नच खलु गुणा एवच गुणा**
**निबन्धस्वातन्त्र्यं सपदि गुणदोषान् विभजते।**
**इयं सा वैदग्धी प्रकृतिमधुरा तस्य सुकवे**
**र्यदत्रोत्पादादप्यतिसुभगभावः परिणतः॥"**

इति शिवम्..

**प्रमाणपदमीमांसागगनं वै विराजते।**
**समुच्छलति यत्स्पृष्टः साहित्यामृत सागरः॥**
**कवीन्दोरिन्दुराजस्य ते मच्चित्तविकासकाः;**
**बोधांशवो विगाहन्तां भूर्भुवःस्वस्त्रयीमपि ॥**
**तत्परामर्शधवलमनःकोकनदो मनाक्।**
**काव्येऽभिनवगुप्ताख्यो विवृतिं समरीरचत्॥**

(ता.) येन परेण कविना अहं यमर्कजीयेय तस्मै घटखर्परेणाहम् उदकं वहेयं तस्य किङ्करो भवेयमित्यर्थः.एतत्प्रतिज्ञादृढीकरणार्थं शपथं प्राह कविः भावानुरक्तवनितासुरतैः शपेयम्. भावेन चित्तेन परमार्थेनानुरक्तानुरागयुक्ता सा चासौ वनिता. सुरतानि न प्राप्नुयामित्यर्थः (? ). यदि प्रतिज्ञां न पालयामि. तृषितः पिपासितः करकोषपेयं हस्तपुटपातव्यम् अम्बु जलं चालभ्य अप्राप्य शपेयं शपथं कुर्यान्. इति श्री घटखर्परकाव्यं सम्पूर्णम्. शुभं भवतु.

(टि.) जीवेय इति ताराचन्द्रटीकाया मातृकायां भ्रान्तः पाठः.